आनीय यः कूपशमीमहेशान् वैश्याविवाहे विववार साक्ष्यम् ।
लीलास्वनन्तास्वपि यस्य दृष्टा लीला चतुष्षष्टिरियं[1] पुराणे ॥ ९१ ॥

आलम्बमेकं जगतां त्रयाणामव्याजकारुण्यसुधानिधानम् ।
तं तादृशं त्वामपहाय शम्भो! किं तावदन्यैरिह किम्पचानैः ॥ ९२ ॥

इति स्तवोक्त्या मुदितः सुराणामीशः स वैश्यां सह वल्लभेन ।
निर्विष्टभोगामवनौ चिराय निन्ये परं धाम दयार्द्रचेताः ॥ ९३ ॥

इत्थं समस्तार्त्तिहरः प्रजानामीशः कदम्बद्रुममूलधामा ।
आस्ते त्रिलोकीमनुकम्पमानः साचिव्यतो मीनविलोचनायाः ॥ ९४ ॥

श्रोतव्यं निधिरस्ति कोऽपि निहितो हालास्य इत्यग्रतो
मन्तव्यं स निधिर्जगन्निधिरिति न्यायैरथोच्चावचैः ।
ध्यातव्यं हृदि मूललिङ्गमथ च श्रीसुन्दरेशाभिधं
द्रष्टव्यं शफरेक्षणासहचरं तत्त्वं ततः शाङ्करम् ॥ ९५ ॥

लीलां चतुष्षष्टिमिमां प्रणीतां हालास्यनेतुस्तरुणेन्दुमौलेः ।
श्रीनीलकण्ठे मयि कर्णजाहमानीय §मीनाक्षि! चिरं दयेथाः ॥ ९६ ॥

कृतिः समर्प्या विरसा मयेति कस्यैष दोषः स परं भवान्याः ।
रम्यां कृतिं सा यदि रोचयेत तथानुगृह्णातु निवारितं कैः ॥ ९७ ॥

मा भूवन् नव च रसाः कविप्रणीताः
काव्येऽस्मिन् पदकमलार्पिते पुरारेः ।
आस्ते तु ध्रुवमखिलाभिनन्दनीयां
कारुण्यामृतरसकन्दली जनन्याः ॥ ९८ ॥

हालास्येशितुरीशितुर्यदि सखे! लीलासु शुश्रूषसे
तत्सर्वागमगुप्तमस्य यदि वा तत्त्वं विजिज्ञाससे ।
पारं वाथ दिदृक्षसे यदि परं काव्यागमस्रोतसां
तत् कर्णे कुरु नीलकण्ठमखिनो वाचं शिवैकाश्रयाम् ॥ ९९ ॥

१. 'लीलाचतुष्षष्टि' इति पाठः स्यात् ।

§ इतः प्रभृति ९८ तमश्लोकप्रथमपादावधिकानि अक्षराणि त्रुटितानि कपुस्तके.

मलयध्वजपाण्ड्यकन्यका-
चरणद्वन्द्वनिवेशितात्मना ।
शिवयोः कविनेदमर्पितं
**शिवलीलार्णवकाव्यमद्भुतम्** ॥ १०० ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्य-
चतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजि-
श्रीम**दप्पयदीक्षित**सोदर्या**च्चान्दीक्षित**-
पौत्रेण **नारायणदीक्षिता**त्मजेन
**भूमिदेवी**गर्भसम्भवेन महाकवि-
श्री**नीलकण्ठदीक्षितेन**
विरचिते शिवलीलार्णवे
महाकाव्ये
द्वाविंशः सर्गः ।

समाप्तश्चायं
**शिवलीलार्णवः** ।

३७७